**कपिलासिका**— वीणा.

आद्या वीणा तु या प्रोक्ता सैव स्यात्कपिलासिका ।
दशमुष्टिमितो वैकादशमुष्टिमितोऽपि वा ॥
आद्याया दण्ड आख्यातः पादोनद्व्यङ्गुल पुनः ।
सुषिरं तत्र कर्तव्यं वेष्टनेऽष्टाङ्गुलं पुनः ॥
तस्यैवोभयतो देयं रौप्यसंवरकद्वयम् ।
तद्रन्ध्रे ककुभः स्थाप्यः पादोनद्व्यङ्गुलोन्नतः ॥
तद्दक्षिणे लोहकलं तद्वद्वा लोहतन्त्रिका ।
श्रुतिस्मृतिकरी कार्या अन्यस्या लोहपत्रिका ॥
ककुभोपरि तत्पृष्ठे बद्धव्या लोहतन्त्रिका ।
नवाङ्गुलान्तरं तत्र ककुभा तुम्बकं न्यसेत् ॥
अष्टादशाङ्गुलमुखं चक्रत्वे चारुगर्भकम् ।
सकुम्भमुन्नतानम्रं कान्तिमद्वर्तुलं द्वयम् ॥
एकमन्यदपि स्थाप्यं वाममूर्धादधः पुनः ।
तस्माद्बहिर्गते दण्डे बद्धस्तस्य दृढं पुनः ॥
तस्मादधोऽपि वर्धन्यो दातव्यापि दृढं पुनः ।
कांस्यैश्च पित्तलैर्वापि दातव्या नखरी बुधैः ॥
एवं विनिर्मिता वीणा वैणिकैः कपिलासिका ।
ककुभोऽपि हि तत्पृष्ठे बद्धव्यो लोहतोलकैः ॥

नारायणः

**आद्या वीणा** — सङ्गीतसरणौ वीणानां नामनिर्देशे एतदुक्तम् ।
आद्या वीणा तु या ख्याता सैव स्यात्कपिलासिका ।
[रौद्री] वीणा किन्नरी च विपञ्ची परिवादिनी ।

**कपिशीला**— स्त्री.

संहताल्पतनुर्दंष्ट्रा पिङ्गरोमा छलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षारामवनप्रिया ।
स्वल्पमप्युपकारं तु कृतं या बहुमन्यते ।
प्रसह्यरतिशीला च कपिसत्त्वं समाश्रिता ॥

भरतः

**कपोतः**— हस्तः

कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ ।
अस्य कूर्मक इत्यन्यां संज्ञां हस्तविदो विदुः ॥
प्रणामे गुरुसंभाषे विनयाङ्गीकृतौ त्वयम् ।
प्राङ्मुखः सशिरः कम्पः स्त्रीकापुरुषयोर्भवेत् ॥

शार्ङ्गः

करावश्लिष्टतलकौ श्लिष्टमूलाग्रपार्श्वगौ ।
कपोताकृतितो हस्तः कपोतः कीर्तितो बुधैः ॥

कुम्भः

कूर्मकं कथयन्त्येनमपरे कूर्मकाकृतिम् ।

ज्यायनः

प्रणामे विनये कार्यौ गुरुसम्भाषणेऽपि च ।
प्राङ्मुखः कम्पितो वक्षः स्थितदर्शिते स्त्रियामपि ॥
कातरे स्यादथेयत्ता परिच्छेदे तु विच्युतः ।
सखेदवचसीदानीं इत्यर्थेऽस्य च सूचने ॥
आज्ञाप्रतिज्ञयोर्नाथे प्रसादेऽवहितेऽपि च ।
पक्षपाते पराधीने भक्षणे प्रतिपादने ॥
सेवायामपि योज्यौऽसौ लोकयुक्त्यनुसारतः ।
विच्युतश्लिष्टपार्श्वोऽसौ भिक्षायां करपात्रिणाम् ॥
इतराण्यपि कर्माणि बुधैरूह्यानि युक्तितः ॥

अशोकः

अन्योन्यश्लिष्टमूलाग्रपार्श्वगौ सर्पशीर्षकौ ।
यत्र सोयं कपोतः स्यात्कूर्मकश्चेत्यसौ मतः ॥
वक्षःप्रदेशनिहितः प्रणामेऽसौ प्रयुज्यते ।
गुरुसम्भाषणे चैष हृदि शश्वन्नतोन्नतः ॥
विनयाङ्गीकृतावेषा पार्श्वे किञ्चिन्नतो भवेत् ।
स्त्रीणां कापुरुषाणां च हीने गीते च सम्मतः ॥
विमुक्ताङ्गुलिना योगः कर्तव्यः खिन्नभाषिते ।
तथैव प्रसृतः किञ्चिदेतावदिति भाषणे ॥

वेमः

**कपोलौ**—

समौ क्षामौ कम्पितौ च फुल्लाख्यौ कुञ्चितावपि ।
पूर्णौ कपोलौ षोढेति तल्लक्ष्माद्यधुना ब्रुवे ॥

अशोकः

**कफिलः**—फूत्कारदोषः

कफिलस्तु कफोद्रेकपरिभूतान्मुखाद्ध्वनिः ।
विरसस्फुटितश्रोतृचित्तोद्वेगः ॥

वेमः

कफिलः कफतो वक्त्राद्विस्वरस्फरणे स्मृतः ।
विद्युद्विध्वस्तवृक्षोत्थ ऋक्षस्वानानुकारकृत् ।

कुम्भः

**कमठध्वजः**—मेलरागः (श्यामलाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स
(अव) प ध प म ग रि ग स

मञ्ज

**कमलः**—गीतालङ्कारः (मठ्यभेदः)

लघुद्वयं गुरुश्चैकस्तालोऽयं दर्पणः स्मृतः ।
अस्मिंस्ताले रसश्शान्तः कमलो मठयको भवेत् ॥

संगीत सारः

—गीतालङ्कारः—(ध्रुवभेदः)

वर्णैश्च सप्तदशभिरङ्घ्रिः शृङ्गारके रसे ।
कमलो मलयाल्ये वै आयुर्वृद्धिकरः परः ॥
मलयाल्यो भवेत्तालो गुरुर्लघुस्ततो गुरुः ।

**कमलः**—तालः

शरःकूपद्वयं लौ द्वौ द्रुतौ द्वौ नगणस्तथा ।
कमले मण्ठके ज्ञेयः सर्वशास्त्रेषु सम्मतः। । ०० ॥ ०० ॥ ।

वेदः

—देशीतालः

कमले लोवमध्यगः ० SS । ०

कुम्भः

कमले मगणो लो द्रुः SSS । ०

लक्ष्मणः

**कमलदलाक्षी**—ध्रुवावृत्तम् (एकादशाक्षरम्)

अष्टौ द्रुता लघू मध्ये गुरुरन्ते व्यवस्थितः ।
कमलदलाक्षी ज्ञेया भंङ्गश्चचत्पुटस्य तु ॥
राज्ञां प्रवेशे कर्तव्या व्यवहारावलोकने ।
मालवकैशिकरागेण गातव्येयं ध्रुवा सदा ॥

नान्यः

अस्या रुचिरमुखीति नामान्तरम् ।
यदि खलु मध्येत्वथ गुरुणी पुनरपि चान्त्यं गुरुचरणे ।
भवति हि नित्यं रुचिरमुखी कमलदलाक्षीति हि कथिता ॥
अभिरुह्माणो उदयगिरिमारोहन्नुदयगिरिम् ।

भरतः

अत्रैकादशाक्षरो गुरुः। अक्षरदशके, मध्ये इति पञ्चमषष्ठाक्षरौ गुरू भवतः ।

**कमलमण्ठकः**—देशीतालः

शरः कूपद्वयं लौ द्वौ द्रुतौ द्वौ नगणस्तथा ।
कमलो मण्ठको ज्ञेयः सर्वशास्त्रेषु सम्मतः ॥
। ०० ॥ ०० ॥ ।

दामोदरः

**कमलामनोहरी**—मेलरागः (वकुलाभरणमेलजन्यः)

(आ) स ग म प नि स
(अव) स नि ध प म ग स

मत्र

**कमलमुखी**—ध्रुवावृत्तम् (पञ्चाक्षरा)

यदि च गुरुः पञ्चनिधने भवति हि सा कमलमुखी ।
(उदा) विमलघणो (छाया) विमलघनः ॥

भरतः

उत्तमेषु प्रयोक्तव्या ध्रुवा पद्ममुखी सदा ।
चच्चत्पुटेन तालेन रागे पञ्चमसंज्ञके ॥

नान्यः

**कमलमोहनं**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प नि ध स
(अव) स ध प म ग रि स

मत्र

**कमलविलासः**—देशीतालः

। SSSSS ॥ । ॥ । ॥ । ॥ ००००००००००

हम्मीरः

**कमलाननः**—देशीतालः

॥ SSS ṠṠṠ ॥० ०̇

हम्मीरः

**कमलामनोहरी**—मेलरागः मध्यमावतीमेलः

(आ) स ००० ग म ० प ०० नि ० स
(अव) स ० नि ० ध प ० म ग ००० स

मेललक्षणे.

**कमलिकावसन्तः**—मेलरागः (साल्वगमेलजन्यः)

(आ) स रि ग रि म प ध नि स
(अव) स नि ध म ग रि स

मत्र

**कमाची**—मेलरागः

(आ) स ०००० म ० प ० धनि ० स
(अव) सनि ० ध ० प ० मग ० रि ० स

मेललक्षणे

**कम्पः**—शिल्पकाङ्गम्

तद्दृश्यते परिवारप्रार्थनाभिः क्रियास्थिति ।
मनसश्चलनं कम्पोऽकाण्डेनाकामतो यथा ॥

शारदातनयः

**कम्पः**—सात्विकभावः

शीतभयहर्षरोषस्पर्शजरासंभवः कम्पः ।
वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रदर्शयेत् ॥

भरतः

वेपथूरोषत्रासजराप्रियामिनवसङ्गमैर्जायते।
तमङ्गानां हरणैर्निदर्शयेत् वेपथुरेव कम्पः॥

सागरः

**कम्पनम्**

क्रियायां वामहस्तव्यापारः। तत्र द्रष्टव्यम्।

**कम्परायस्थापकः**—देशीताल:

कम्परायस्थापके त्रिः पपगास्सामजौ द्रुतम्।
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽ०

गोपतिप्पः

**कम्पातालः**—देशीताल:

कम्पाताले विरामान्तं द्रुतद्वन्द्वं लघुस्ततः।
० ० ।

सोमराजः

**कम्पितम्**—वक्षः

ऊर्ध्वक्षेपैरविरतैः कम्पितं स्यात्प्रकम्पितम्।
एतद्विहसिते श्वासे हिक्कायां रोदने श्रमे॥
कासे च साध्वसे नाट्ये दृश्ये चैतत्प्रकम्पितम्॥

वेमः

इदं सोमेश्वरः व्याकम्पितमित्याह॥

—शिरः

भूरिशश्शीघ्रमूर्ध्वाधःकम्पनात्कम्पितं शिरः।
क्रोधेऽभ्युपगमे ज्ञाने विचारे व्याध्यमर्षयोः॥
शीघ्रप्रश्ने तर्जने च प्रयोज्यं कम्पितं शिरः।

विप्रदासः

वितर्करोषविज्ञानप्रतिज्ञातर्जनादिषु॥

ज्यायनः

बहुशो द्रुतमूर्ध्वाधःकम्पनात्कम्पितं शिरः।
ज्ञानेऽभ्युपगमे रोषे वितर्के तर्जने तथा॥
त्वरितप्रश्नवाक्ये च प्रयोक्तव्यमिदं शिरः।

शार्ङ्गः

—अधरः

कम्पितः कम्पनाद्भीरुङ्व्यथाशीतजपादिषु।

कुम्भः

—ऊरुः

नतोन्नतौ मुहुस्स्यातां ऊर्वोर्यस्य स कम्पितः।
अधमानां गतौ प्रोक्तो विनियोगोऽस्य सूरिभिः॥

अशोकः

पतितोत्पतितौ पार्ष्णी यस्यासौ कम्पितो मतः।
गमने कान्दिशीकानां नीचानां च परिक्रमे॥

वेमः

नतोन्नतौ मुहुः पार्श्वौ यस्यासौ कम्पितो मतः॥

विप्रदासः

**कम्पितः**—कपोलः

स्फुरितः कम्पितः कोपे प्रमोदे च विधीयते।

ज्यायनः

स्फुरितौ कम्पितौ स्यातां कपोलौ रोषहर्षयोः।

वेमः

सुवेपितौ कम्पितौ च रोमहर्षेषु निर्दिशेत्।

विप्रदासः

—श्वासः

बुधैरुक्तः कम्पितः सुरतेऽनिलः।

अशोकः

—कटी

यातायातैस्तिरश्चीनैः वेगितः कम्पिता मता।
नीचवामनकुब्जानां गतानुकरणेष्वियम्॥

ज्यायनः

**कम्पिता**—जङ्घा

कम्पं स्याद्धूननं त्रासे गर्धरीणां च वादने॥

ज्यायनः

रेचिता कम्पिता ज्ञेया कम्पिता शीतवेपथौ॥

सोमेश्वरः

**कम्पिता**—वंशे गतिः

वंशस्याधरपर्यन्तनिहितस्य प्रकम्पनात्।
गतिः स्यात्कम्पिता वर्णालङ्कारोत्पत्तिकारिणी॥

वेमः

कम्पिता कम्पनादुक्ता वंशस्याधरगस्य तु।
वर्णालङ्कारनिष्पत्त्यै प्रयोगोऽस्याः प्रदर्शितः॥

कुम्भः

—वंशेऽङ्गुलिगतिः

यत्र प्रपूरणे वंशमधरस्थं प्रकम्पयेत्।
कम्पिता सा गतिः प्रोक्ता वर्णालङ्कारगामिनी॥

विशाखिलः

**कम्पिता**—वीणासारणा

कनिष्ठिकायाः कम्पनेन स्वरस्थानेषु कम्पिता।

कुम्भः